# Taittirīya-Āraṇyaka

Edited by Subramania Sarma, Chennai

Proofread Version of November 2005

## Chapter 9

[[9-0-0]]

स॒ह ना॑ववतु।

स॒ह नौ॑ भुनक्तु।

स॒ह वी॒र्यं॑ करवावहै।

ते॒ज॒स्वि ना॒वधी॑तमस्तु॒ मा वि॑द्विषा॒वहै॑।

ॐ शान्तिः॒ शान्तिः॒ शान्तिः॑॥

[[9-1-1]]

भृगु॒र्वै वा॑रु॒णिः।

वरु॑णं॒ पित॑र॒मुप॑ससार।

अधी॑हि भगवो॒ ब्रह्मेति॑।

तस्मा॑ ए॒तत्प्रो॑वाच।

अन्नं॑ प्रा॒णं चक्षु॒श्श्रोत्रं॒ मनो॒ वाच॒मिति॑।

तꣳ हो॑वाच।

यतो॒ वा इ॒मानि॒ भूता॑नि॒ जाय॑न्ते।

येन॒ जाता॑नि॒ जीव॑न्ति।

यत्प्रय॑न्त्य॒भिसंवि॑शन्ति।

तद्विजि॑ज्ञासस्व।

तद्ब्रह्मेति॑।

स तपो॑ऽतप्यत।

स तप॑स्त॒प्त्वा॥ १॥ ॥ १॥

[[9-2-1]]

अन्नं॒ ब्रह्मेति॒ व्य॑जानात्।
अ॒न्नाद्ध्ये॑व खल्वि॒मानि॒ भुता॑नि॒ जाय॑न्ते।
अन्ने॑न॒ जाता॑नि॒ जीव॑न्ति।
अन्नं॒ प्रय॑न्त्य॒भिसंवि॑श॒न्तीति॑।
तद्वि॒ज्ञाय॑।
पुन॑रे॒व वरु॑णं॒ पित॑र॒मुप॑ससार।
अधी॑हि भगवो॒ ब्रह्मेति॑।
तꣳ हो॑वाच।
तप॑सा॒ ब्रह्म॒ विजि॑ज्ञासस्व।
तपो॒ ब्रह्मेति॑।
स तपो॑ऽतप्यत।
स तप॑स्त॒प्त्वा॥ २॥ ॥ २॥

[[9-3-1]]
प्रा॒णो ब्र॒ह्मेति॒ व्य॑जानात्।
प्रा॒णाद्ध्ये॑व खल्वि॒मानि॒ भूता॑नि॒ जाय॑न्ते।
प्रा॒णेन॒ जाता॑नि॒ जीव॑न्ति।
प्रा॒णं प्रय॑न्त्य॒भिसंवि॑श॒न्तीति॑।
तद्वि॒ज्ञाय॑।
पुन॑रे॒व वरु॑णं॒ पित॑र॒मुप॑ससार।
अधी॑हि भगवो॒ ब्रह्मेति॑।
तꣳ हो॑वाच।
तप॑सा॒ ब्रह्म॒ विजि॑ज्ञासस्व।
तपो॒ ब्रह्मेति॑।
स तपो॑ऽतप्यत।
स तप॑स्त॒प्त्वा॥ ३॥ ॥ ३॥

[[9-4-1]]
मनो॒ ब्रह्मेति॒ व्य॑जानात्।
मन॑सो॒ ह्ये॑व खल्वि॒मानि॒ भूता॑नि॒ जाय॑न्ते।

मनसा जातानि जीवन्ति।
मनः प्रयन्त्यभिसंविशन्तीति।
तद्विज्ञाय।
पुनरेव वरुणं पितरमुपससार।
अधीहि भगवो ब्रह्मेति।
तꣳ होवाच।
तपसा ब्रह्म विजिज्ञासस्व।
तपो ब्रह्मेति।
स तपोऽतप्यत।
स तपस्तप्त्वा॥ ४॥ ॥ ४॥

[[9-5-1]]
विज्ञानं ब्रह्मेति व्यजानात्।
विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते।
विज्ञानेन जातानि जीवन्ति।
विज्ञानं प्रयन्त्यभिसंविशन्तीति।
तद्विज्ञाय।
पुनरेव वरुणं पितरमुपससार।
अधीहि भगवो ब्रह्मेति।
तꣳ होवाच।
तपसा ब्रह्म विजिज्ञासस्व।
तपो ब्रह्मेति।
स तपोऽतप्यत।
स तपस्तप्त्वा॥ ५॥ ॥ ५॥

[[9-6-1]]
आनन्दो ब्रह्मेति व्यजानात्।
आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते।
आनन्देन जातानि जीवन्ति।
आनन्दं प्रयन्त्यभिसंविशन्तीति।

सैषा भा᳚र्ग॒वी वा॑रु॒णी वि॒द्या।
प॒र॒मे व्यो॑म॒न्प्रति॑ष्ठिता।
स य ए॒वं वेद॒ प्रति॑तिष्ठति।
अन्न॑वानन्ना॒दो भ॑वति।
म॒हान्भ॑वति प्र॒जया॑ प॒शुभि॑र्ब्रह्मवर्च॒सेन॑।
म॒हान्की॒र्त्या॑॥ ६॥ ॥ ६॥

[[9-7-1]]
अन्नं॒ न नि॑न्द्यात्।
तद्व्र॒तम्।
प्रा॒णो वा अन्न᳚म्।
शरी॑रमन्ना॒दम्।
प्रा॒णे शरी॑रं॒ प्रति॑ष्ठितम्।
शरी॑रे प्रा॒णः प्रति॑ष्ठितः।
तदे॒तदन्न॒मन्ने॒ प्रति॑ष्ठितम्।
स य ए॒तदन्न॒मन्ने॒ प्रति॑ष्ठितं॒ वेद॒ प्रति॑तिष्ठति।
अन्न॑वानन्ना॒दो भ॑वति।
म॒हान्भ॑वति प्र॒जया॑ प॒शुभि॑र्ब्रह्मवर्च॒सेन॑।
म॒हान्की॒र्त्या॑॥ ७॥ ॥ ७॥

[[9-8-1]]
अन्नं॒ न परि॑चक्षीत।
तद्व्र॒तम्।
आपो॒ वा अन्न᳚म्।
ज्योति॑रन्ना॒दम्।
अ॒प्सु ज्योति॒ः प्रति॑ष्ठितम्।
ज्योति॒ष्याप॒ः प्रति॑ष्ठिताः।
तदे॒तदन्न॒मन्ने॒ प्रति॑ष्ठितम्।
स य ए॒तदन्न॒मन्ने॒ प्रति॑ष्ठितं॒ वेद॒ प्रति॑तिष्ठति।
अन्न॑वानन्ना॒दो भ॑वति।

म॒हान्भ॑वति प्र॒जया॑ प॒शुभि॑र्ब्रह्मवर्च॒सेन॑।
म॒हान्की॒र्त्या॥ ८॥ ॥ ८॥

[[9-9-1]]
अन्नं॑ ब॒हु कु॑र्वीत।
तद्व्र॒तम्।
पृ॒थि॒वी वा अन्न॓म्।
आ॒का॒शो॓ऽन्ना॒दः।
पृ॒थि॒व्यामा॑का॒शः प्रति॑ष्ठितः।
आ॒का॒शे पृ॑थि॒वी प्रति॑ष्ठिता।
तदे॒तदन्न॒मन्ने॒ प्रति॑ष्ठितम्।
स य ए॒तदन्न॒मन्ने॒ प्रति॑ष्ठितं॒ वेद॒ प्रति॑तिष्ठति।
अन्न॑वानन्ना॒दो भ॑वति।
म॒हान्भ॑वति प्र॒जया॑ प॒शुभि॑र्ब्रह्मवर्च॒सेन॑।
म॒हान्की॒र्त्या॥ ९॥ ॥ ९॥

[[9-10-1]]
न कंचन वसतौ प्रत्या॑चक्षी॒त।
तद्व्र॒तम्।
तस्माद्यया कया च विधया बह्व॑न्नं प्रा॒प्नुयात्।
अराध्यस्मा अन्नमि॑त्याच॒क्षते।
एतद्वै मुखतो॓ऽन्नꣳ रा॒द्धम्।
मुखतोऽस्मा अ॑न्नꣳ रा॒ध्यते।
एतद्वै मध्यतो॓ऽन्नꣳ रा॒द्धम्।
मध्यतोऽस्मा अ॑न्नꣳ रा॒ध्यते।
एतद्वा अन्ततो॓ऽन्नꣳ रा॒द्धम्।
अन्ततोऽस्मा अ॑न्नꣳ रा॒ध्यते।
य ए॑वं वे॒द।
क्षेम इ॑ति वा॒चि।
योगक्षेम इति प्रा॑णापा॒नयोः।

कर्मेति हस्तयोः।
गतिरिति पादयोः।
विमुक्तिरिति पायौ।
इति मानुषीस्समाज्ञाः।
अथ दैवीः।
तृप्तिरिति वृष्टौ।
बलमिति विद्युति।
यश इति पशुषु।
ज्योतिरिति नक्षत्रेषु।
प्रजातिरमृतमानन्द इत्युपस्थे।
सर्वमित्याकाशे।
तत्प्रतिष्ठेत्युपासीत।
प्रतिष्ठावान्भवति।
तन्मह इत्युपासीत।
महान्भवति।
तन्मन इत्युपासीत।
मानवान्भवति।
तन्नम इत्युपासीत।
नम्यन्तेऽस्मै कामाः।
तद्ब्रह्मेत्युपासीत।
ब्रह्मवान्भवति।
तद्ब्रह्मणः परिमर इत्युपासीत।
पर्येणं म्रियन्ते द्विषन्तस्सपत्नाः।
परि येऽप्रिया भ्रातृव्याः।
स यश्चायं पुरुषे।
यश्चासावादित्ये।
स एकः।
स य एवं वित्।
अस्माल्लोकात्प्रेत्य।

एतमन्नमयमात्मानमुपसंक्रम्य।
एतं प्राणमयमात्मानमुपसंक्रम्य।
एतं मनोमयमात्मानमुपसंक्रम्य।
एतं विज्ञानमयमात्मानमुपसंक्रम्य।
एतमानन्दमयमात्मानमुपसंक्रम्य।
इमाँल्लोकन्कामान्नी कामरूप्यनुसंचरन्न्।
एतथ्साम गायन्नास्ते।
हा ३ वु हा ३ वु हा ३ वु।
अहमन्नमहमन्नमहमन्नम्।
अहमन्नादोऽ३ऽहमन्नादोऽ३ऽअहमन्नादः।
अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत्।
अहमस्मि प्रथमजा ऋता३स्य।
पूर्वं देवेभ्यो अमृतस्य ना३भायि।
यो मा ददाति स इदेव मा३वाः।
अहमन्नमन्नमदन्तमा३द्मि।
अहं विश्वं भुवनमभ्यभवाम्।
सुवर्न ज्योतीः।
य एवं वेद।
इत्युपनिषत्॥ १०॥
राध्यते विद्युति मानवान्भवत्येको हा३वु य एवं वेदैकञ्च॥ १०॥

भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व तत्त्वयोदशान्नं प्राणो मनो विज्ञानमिति विज्ञाय तन्तपसा द्वादश द्वादशानन्द इति सैषा दशान्नं न निन्द्यात्प्राणश्शरीरं अन्नं न परिचक्षीतापो ज्योतिरन्नं बहु कुर्वीत पृथिव्याकाश एकादशैकादश न कञ्चनैकषष्टिर्दश॥ १०॥

[[9-0-0]]
सह नाववतु।
सह नौ भुनक्तु।
सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै।

